( त्यु ) अयोऽअभ्येव मृशेत् । ( हे ) देवान्दिवमगन्यज्ञस्ततो मा द्रविणमष्टु मनुष्यानन्तरिक्षमगन्यज्ञस्ततो मा द्रविणमष्टु पितृन्पृथिवीमगन्यज्ञस्ततो मा द्रविणमष्टु यं कं च लोकमगन्यज्ञस्ततो मे भद्रमभूदित्येवैतदाह ॥ ८ ॥

तद्ध स्मैतदारुणिराह । किं स यजेत यो यज्ञस्य व्यृद्ध्या पापीयान्मन्येत यज्ञस्य वाऽअहं व्यृद्ध्या श्रेयान्भवामीत्येतद्ध स्म स तदभ्याह यदेता आशिष उपगच्छति ॥ ९ ॥

इति चतुर्थप्रपाठकेऽष्टमं ब्राह्मणम् ॥ ८ ॥ ५. ७. ॥

---

अयोऽअभ्येव मृशेत्–" देवान्दिवमगन्यज्ञः ततो मा द्रविणमष्टु, मनुष्यानन्तरिक्षमगन्यज्ञः ततो मा द्रविणमष्टु, पितॄन्पृथिवीमगन्यज्ञः ततो मा द्रविणमष्टु– यं कं च लोकमगन्यज्ञः । ततो मे भद्रमभूत् " ( वा. सं. ८ । ६० ) इत्येवैतदाह ॥ ८ ॥

तद्ध स्मैतदारुणिराह–किं स यजेत-यो यज्ञस्य व्यृद्ध्या पापीयान्मन्येत । यज्ञस्य वाऽअहं व्यृद्ध्या श्रेयान्भवामीत्येतद्ध स्म स तदभ्याह–यदेता आशिष उपगच्छति ॥ ९ ॥

इति प्रायश्चित्तम् ।

---

अयो अभ्येव मृशेदिति । देवैस्तत्र सोम नाद्रियन्निनयेत् । कालाहुतिभिश्चैतत्समुच्चीयते । भिन्नांशवर्तित्वादध्वर्युश्चेद कुर्यात् । समाख्यानात् । कालाहुतिमात्रब्राह्मणश्रवणात् ॥ ८ ॥

तद्ध स्मैतदिति । या एता आशिषस्ततो मा द्रविणमष्टिृत्यादय. । एव तु स्कन्दनविशेषास ( नम्थनन सर्वस्मादृयते न लिङ्गक्रमात् ) प्रात मशस्य दोह इत्यस्य वाचन दर्शयति पूर्वासु कालाहुतिषु ॥ ९ ॥

इति श्रीहरिस्व मिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये चतुर्थकाण्डे
पञ्चमेऽध्याये सप्तमं ब्राह्मणम् ॥ ४–७ ॥

---

१–' य कच ' इत्यादिभागो मन्त्रतयैवाम्नात संहितायाम् । इह तु सोऽस्य, फलितार्थकथनंमात्र प्रतीयते । अत्र संहितायाम्–' चतुस्त्रिंशत्तन्तव. '–इति, ' यज्ञस्य दोहः '–इति, ' आपवस्त '–इत्येव त्रयः प्रायश्चित्तार्था होममन्त्रा अभ्येऽध्युक्तास्त इह ब्राह्मणे न दृश्यन्ते ।

२–देवान् दिवमगन्निति सोमे । सोमे स्कन्नहविर्निर्देशप्रायश्चित्तमिदमिति कर्कः । का. श्रौ. सू. २५ । २७ ।

३–सोमेऽयोऽपगते [illegible] समाप्त [illegible]
कर्क [illegible]

तद्यत्रैतत्त्रिरात्रे सहस्रं ददाति । तदेषा साहस्री क्रियते स प्रथमेऽहंस्त्रीणि च शतानि नयति त्रयस्त्रिंशतं शतं चैवमेव द्वितीयेऽहंस्त्रीणि चैव शतानि नयति त्रयस्त्रिंशतं शतं चैवमेव तृतीयेऽहंस्त्रीणि चैव शतानि नयति त्रयस्त्रिंशतं चाथैषा साहस्र्यतिरिच्यते ॥ १ ॥

सा वै त्रिरूपा स्यादित्याहुः । ( रे ) एतद्ध्यस्यै रूपतममिवेति रोहिणी ह त्वेवोपध्वस्ता स्यादेतद्धैवास्यै रूपतममिव ॥ २ ॥

सा स्यादप्रवीता । वाग्वाऽएषा निदानेन यत्साहस्र्ययातयाम्नी वाऽइयं वागयातयाम्न्यप्रवीता तस्मादप्रवीता स्यात् ॥ ३ ॥

---

गर्गत्रिरात्रमहीनम् ।

तद् यत्रैतत्त्रिरात्रे सहस्रं ददाति—तदेषा साहस्री क्रियते । स प्रथमेऽहं त्रीणि च शतानि नयति, त्रयस्त्रिंशतं च । एवमेव द्वितीयेऽहं त्रीणि चैव शतानि नयति, त्रयस्त्रिंशतं च । एवमेव तृतीयेऽहं त्रीणि चैव शतानि नयति त्रयस्त्रिंशतं च । अथैषा साहस्र्यतिरिच्यते ॥ १ ॥

सा वै त्रिरूपा स्यादित्याहुः । एतद्ध्यस्यै रूपतममिवेति । रोहिणी ह त्वेवोपध्वस्ता स्यात् । एतद्धैवास्यै रूपतममिव ॥ २ ॥

सा स्यादप्रवीता । वाग्वाऽएषा निदानेन—यत्साहस्री अयातयाम्नी वाऽइयं वाग्, अयातयाम्नी अप्रवीता । तस्मादप्रवीता स्यात् ॥ ३ ॥

---

तद्यत्रैतदिति । साहस्रीब्राह्मणमेतत् । संवत्सरसत्रविषयो वैषुवतो ग्रह इति । मन्त्रक्रमादुपस्थितमप्युत्सार्याहीने गता 'साहस्री' तावदुच्यते । यत्र यस्मिँश्च त्रिरात्रे तिस्रो रात्रय. समाहृतास्त्रिरात्रः । रात्र्या चाहोरात्रं लक्ष्यते, तेनाप्यहोरात्रपरिमित सोमयागस्तथश्च यत्र त्रिरात्रे सोमयागस्तत्र सञ्ज्ञाते गार्गाख्ये सहस्र दक्षिणां ददाति तत्तत्रैषा वक्ष्यमाणा त्रिरूपादिका गौ. साहस्री सहस्रस्य पूरणीत्येतस्मिन्नर्थे वक्ष्यमाणं द्रष्टव्यम् । सहस्राद्वाक्षा क्रियते इति वक्ष्यमाणसम्बन्धार्थ उपन्यासः । कथ नाम स यदेतत् प्रथमेऽहनि इत्याद्येतद्गर्गत्रिरात्रविषय विज्ञाय सतः स प्रथमेऽहनीत्यसमर्थानुवाद एव । स एव समविभक्ताः प्रत्यहं ददातीत्यसद्धर्मस्य सर्वाहीनविषयत्वात् । 'अथैषा साहस्र्यतिरिच्यते' विभक्तुमशक्यत्वात् ॥ १ ॥

सा वै त्रिरूपेति । 'त्रिरूपा' त्रिवर्णा 'रोहिणी' रक्ता 'उपध्वस्ता' वर्णान्तरेणाहता 'रूपतमम्' रूपान्तरेभ्यः प्रकृष्ट रूपम् ॥ २ ॥

सा स्यादप्रवीतेति । वृषेणानुपगता । वाग्वा एवेति । वागेव देवता अस्या अधिदैवतमित्यर्थः । 'अयातयाम्नी' अनुपक्षीणवीर्या वाक् ससारा स्वकार्योदपि हरिणा 'अप्रवीता' असंस्कृतवीर्यत्वात् ॥ ३ ॥

---

१—सहस्रदक्षिणे त्रिरात्रे प्रतिविभज्य नयन् रोहिणीमुपध्वस्तामप्रवीतामतिरेचयाति त्रिरूपा वा । का. श्रौ. सू. । १३ । ७४ ।

( त्वां ) तां प्रथमेऽहन्नयेत् । ( द्वा ) वाग्वाऽएषा निदानेन यत्साहस्री तस्या एतत्सहस्रं वाचः प्रजातं पूर्वा हैत्यति पश्चादेनां प्रजातमन्वेत्यु-त्तमे वैनामहन्नयेत्पूर्वमुहास्यै प्रजातमेति पश्चादुपान्वेति सोऽएषा मीमाᳪं-सैवोत्तमऽएवैनामहन्नयेत्पूर्वᳪंह्यस्यै प्रजातमेवैति पश्चादेपान्वेति ॥ ४ ॥

तामुत्तरेण हविर्धाने । दक्षिणेनाग्नीध्रं द्रोणकलशमवघ्रापयति यज्ञो वै द्रोणकलशो यज्ञमेवैनामनुदर्शयति ॥ ५ ॥

(न्त्री) आजिघ्र कलशम् । (म्म)मह्या त्वा विशन्त्विन्दव इति रिरिचान इव वाऽएष भवति यः सहस्रं ददाति तमेवैतद्रिरिचानं पुनराप्याययति यदाहाजिघ्र कलशं मह्या त्वा विशन्त्विन्दवऽइति ॥ ६ ॥

पुनरूर्जा निवर्तस्वेति । तद्वेव रिरिचानं पुनराप्याययति यदाह पुनरूर्जा निवर्तस्वेति ॥ ७ ॥

---

तां प्रथमेऽहन्नयेत् । वाग्वाऽएषा निदानेन—यत्साहस्री । तस्या एतत्सहस्रं वाचः प्रजातम् । पूर्वा हैति । पश्चादेनां प्रजातमन्वेति । उत्तमे वैनामहन्नयेत, पूर्वमुहास्यै प्रजातमेति, पश्चादेपान्वेति । सोऽएषा मीमांसैव । उत्तमऽएवैनामहन्नयेत । पूर्वमस्यै प्रजातमेवैति, पश्चादेपान्वेति ॥ ४ ॥

तामुत्तरेण हविर्धाने दक्षिणेनाग्नीध्रं द्रोणकलशमवघ्रापयति । यज्ञो वै द्रोणकलशः । यज्ञमेवै-नामनुदर्शयति ॥ ५ ॥

" आजिघ्र कलशं मह्या त्वा विशन्त्विन्दवः "–( वा. सं. ८ । ४२ ) इति । रिरिचान इव वाऽएष भवति–यः सहस्रं ददाति । तमेवैतद्रिरिचानं पुनराप्याययति–यदाह–आजिघ्र कलशं मह्या त्वा विशन्त्विन्दव इति ॥ ६ ॥

" पुनरूर्जा निवर्तस्व "–( वा. सं. ८ । ४२ ) इति । तद्वेव रिरिचानं पुनराप्याययति–यदाह–पुनरूर्जा निवर्तस्वेति ॥ ७ ॥

---

तां प्रथमेऽहन्निति । पूर्वा हैतीति । ( गवां मध्ये नात्र इत्यभिधाय पूर्वमाह एषा इत्येवमपि । ) एतां स्त्रीगाव-श्नो धावन्तो वत्सा इत्याशयः । उत्तमे वैनामिति । ये पुत्रा वत्सास्ते अग्रगा भवन्ति ( तेहमुक्तमिति । एत-स्मादेव वाक्यशेषात् प्रथमे इति यजमानो नान्ये प्रथमो न धातव्याः । ) उत्तमे त्वनुनीयमानाः पश्चादिति गम्यते ॥ ४ ॥

तामुत्तरेणेति । अन्तरा शालासदसि नीत्वा ' द्रोणकलशम ' एव ' अवघ्रापयति ' ' यज्ञो वै द्रोणकलशः ' इत्यत्र शिरसो धारणात् सोमाधारत्वेनेति । यज्ञ एवैनामिति । यज्ञो यजमानस्तं सहस्रेण रिरिचानमनया सहस्रस्य पात्रभूतया रिच्यमानमप्याययतीत्यभिप्रायः ॥ ५ ॥

आजिघ्रेति । स्पष्टार्थतया. ॥ ६–७ ॥

---

१–आजिघ्रेत् प्रथमां नयेदन्येषां पश्चात् । सायेऽहनि पश्चे प्रथमां अत्येत्याऽहनि पश्चात्रयेदिति । का. श्रौ. सू. १३ । ७५ ।
२–हविर्धानयोरन्तरे द्रोणकलशमेनामवघ्रापयत्याजिघ्रेति । का. श्रौ. सू. १३ । ७६ ।

सा नः सहस्रं धुक्ष्वेति । तत्सहस्रेण रिरिचानं पुनराप्याययति यदाह सा नः सहस्रं धुक्ष्वेति ॥ ८ ॥

(त्यु) उरुधारा पयस्वती पुनर्माविशताद्रयिरिति । तदेव रिरिचानं पुनराप्याययति यदाह पुनर्माविशताद्रयिरिति ॥ ९ ॥

(त्यु) अथ दक्षिणे कर्णेऽआजपति । (त्री) इडे रन्ते हव्ये काम्ये चन्द्रे ज्योतेऽदिति सरस्वति महि विश्रुति ॥ एता तेऽअघ्न्ये नामानि देवेभ्यो मा सुकृतं ब्रूतादिति वोचेरिति वैतानि ह वाऽअस्यै देवत्रा नामानि स यानि ते देवत्रा नामानि तैर्मा देवेभ्यः सुकृतं ब्रूतादित्येवैतदाह ॥ १० ॥

तामुत्सर्जन्ति । सा यद्युपुरुषाभिवीता प्राचीयात्तत्रविद्यादुरात्सीदयं यजमानः कल्याणं लोकमजैषीदिति यद्युदीचीयाच्छ्रेयानस्मिँल्लोके यजमानो भविष्यतीति विद्याद्यदि प्रतीचीयाद्भिर्यतिलिखन इव धान्यतिलिखो भविष्यतीति विद्याद्यदि दक्षिणेयात्क्षिप्रेऽस्माल्लोकाद्यजमानः प्रैष्यतीतिविद्यादेतानि विज्ञानानि ॥ ११ ॥

---

"सा नः सहस्रं धुक्ष्व"–(वा. सं. ८।४२) इति । तत्सहस्रेण रिरिचानं पुनराप्याययति–यदाह–सानः सहस्रं धुक्ष्वेति ॥ ८ ॥

"उरुधारा पयस्वती पुनर्माविशताद्रयिः"–(वा. सं. ८।४२) इति । तदेव रिरिचानं पुनराप्याययति–यदाह–पुनर्मा विशताद्रयीरिति ॥ ९ ॥

अथ दक्षिणे कर्णेऽआजपति–"इडे रन्ते हव्ये काम्ये चन्द्रे ज्योतेऽदिति सरस्वति महि विश्रुति । एता तेऽअघ्न्ये नामानि देवेभ्यो मा सुकृतं ब्रूतात्"–(वा. सं. ८।४३) इति । वोचेरिति वा । एतानि ह वाऽअस्यै देवत्रा नामानि । स यानि ते देवत्रा नामानि तैर्मा देवेभ्यः सुकृतं ब्रूतादित्येवैतदाह ॥ १० ॥

तामवार्जन्ति । सा यद्यपुरुषाभिवीता प्राचीयात्–तत्र विद्यात्–अरात्सीदयं यजमानः, कल्याणं लोकमजैषीदिति । यद्युदीचीयात्–श्रेयानस्मिँल्लोके यजमानो भविष्यतीति विद्यात् । यदि प्रतीची·

---

अथ दक्षिण' इति । ' वोचेरित्येनत्पयामूला ब्रूयाद् ' ब्रूताद् ' इत्यस्य स्थाने ' वोचेरिति ' ब्रूयात् । ' एतानि ह वै अस्यै ' गोर्देवत्रा देवेषु नामानि ॥ १० ॥

तामवार्जन्तीति । तामवार्जिता साहस्रीमवघ्राय निरस्तां सतीम् ' अवार्जन्ति ' अवसृजन्ति विमुञ्चन्ति साऽ यदृच्छागती ' पुरुषेणाभिवीता ' अभिगमिता अजेोन्यर्थस्य ( वीभ्य ) वी आदेश. । यदि ' प्राचीयात् '

---

१–इडे रन्ते इति दक्षिणेऽस्याः कर्णे यजमानो जपति । रोहिणीसहस्रेऽध्यमिति कर्कः । वोचेरिति वाऽन्ते । ब्रूतादित्यस्य स्थाने ' वोचे ' रिति वा ब्रूयादित्यर्थः का. श्रौ. सू. । १२ । ७ । १४ ।

तद्या एतास्तिस्रस्तिस्रस्त्रिꣳशत्यधि भवन्ति । तास्वेतामुपसमाकुर्वन्ति वि वाऽएतां विराजं वृहन्ति यां व्याकुर्वन्ति विच्छिन्नोऽएषा विराड्या विवृढा दशाक्षरा वै विराट्तत्कृत्स्नां विराजꣳ संदधाति ताꣳ होत्रे दद्याद्धोता हि साहस्रस्तस्मात्ताꣳ होत्रे दद्यात् ॥ १२ ॥

( द्वौ ) द्वौ वोन्नेतारौ कुर्वीत तयोर्यतरो नाश्रावयेत्तस्माऽएनां दद्याद्व्यृद्धो वाऽएष उन्नेता य ऋत्विक्सन्नाश्रावयति व्यृद्धोऽएषा विराड्या विवृढा तद्व्यृद्धऽएवैतद्व्यृद्धं दधाति ॥ १३ ॥

यान्–इम्यतिल्विल इव, धान्यतिल्विलो भविष्यतीति विद्यात् । यदि दक्षिणेयात्–क्षितेऽस्माल्लोका-यजमानः प्रैष्यतीति विद्यात् । एतानि विज्ञानानि ॥ ११ ॥

तद् या एतास्तिस्रस्तिस्रस्त्रिंशत्यधिभवन्ति–तास्वेतामुपसमाकुर्वन्ति । वि वाऽएतां विराजं वृहन्ति–यां व्याकुर्वन्ति । विच्छिन्नोऽएषा विराट्–या विवृढा । दशाक्षरा वै विराट् । तत् कृत्स्नां विराजं सन्दधाति । तां होत्रे दद्यात् । होता हि साहस्रः । तस्मात्तां होत्रे दद्यात् ॥ १२ ॥

द्वौ वोन्नेतारौ कुर्वीत । तयोर्यतरो नाश्रावयेत्–तस्मा एनां दद्यात् । व्यृद्धो वाऽएष उन्नेता–य ऋत्विक्सन्नाश्रावयति । व्यृद्धोऽएषा विराट् या विवृढा । तद् व्यृद्धऽएवैतद्व्यृद्धं दधाति ॥ १३ ॥

गच्छेत् ' तत्र ' निमित्ते ' विद्यादात्मीयं " " ऋधु वृद्धौ "–( धा. पा. स्वा. प. २१ ) । इति धातो रूपम् । निष्कर्मा ' यजमानः ' ' कल्याणम् ' शोभनं स्वर्गं ' लोकं ' जितवान् ' अयम् ' यदि च ' प्रतीचि ' ' इयात् ' तत ' इम्यतिल्विलो भविष्यतीति ' ' विद्यात् ' । " विल संवरणे "–( धा. पा. तु. ६७ ) तिल इव शाखाभिः पुष्पफलेन वर्धते तिल्विलं छान्दसोऽकारलोपः । इभा हस्तिनः इभेभ्यो हिता इभ्याः हस्तिरक्षका इभ्यः तिल्विलो वृत्त इति ( इभ्यतिल्विलत्वमभ्यहस्तिभ्यां भवतीति तत्सदानार्थो एव इभ्याः । ) हस्तिनो भवन्तीत्यर्थः । इवशब्दः समुच्चये । धान्यावृत इव धान्यावृतश्चेत्यर्थः ।

तद्या एता इति । अथैतां विसृष्टां सतीं किं कुर्वन्तीत्यत आह–'या एताः' प्रतिदिवसं 'तिस्रस्तिस्रो गाव-स्त्रिंशतिरधिका अपि 'भवन्ति' " यस्मादधिकं यस्य चेश्वरवचनं–तत्र सप्तमी " ( पा. सू. २।३।९ ) ' तासु ' 'एतासु' पूर्वनीतासु एतां साहस्रीमुपसर्गापि स एकादशभिः कुर्वन्त्येकादशत्वे कुर्वन्तीत्यर्थः । 'विवृहन्ति' " वृहू उद्यमे "–( धा. पा. तु. प. ६६ ) । विनिर्दं हि वैनां ' विराजं ' ' यां ' पृथक् आनयन्ति । ' विच्छिन्ना तु एषा ' ' विराट् ' दक्षिणात्मिका ' या ' ' विवृढा ' विभज्यानीय नीता ततस्तस्मादुद्धृतामवन् सम्यं सम्भवति ' विराजं सन्दधाति ' । दशाक्षरा हि विराट् विराड्रूपको भुवनत्मा च [ सर्वा न्याभिस्त्वावदसद्भेमभु ] संहित एवानया नु ' कृत्स्नां ' ' सन्दधाति ' इत्याशयः । होता दक्षिणां नयतीति । नयनेदाने प्रयुक्तत्वात् । ' तां ' होत्रे दद्यात् ' इति वदतो दाने दर्शनात् । तास्वेतामुपसमाकुर्वन्तीति च पूर्वनीतायाः संसर्गवचनात् यदि तु संसृज्यैव ताभिर्नवभिः साहस्रं नीयते ततः कथं सा विराड्विवृढा व्याकृतायाः स्यात्सम्यादर्शन एवायं नियमो न्यूना दशतोऽपनायादिति ।

1–मध्यतो नवसु दशमीं कृत्वा होत्रे दद्यात् । उन्नेतारौ वा कृत्वा नाश्रावयते । दद्यदद्याभेदेन दक्षिणा दद्यात् । का. श्रौ. सू. १३ । ७९–८१ ।

तदाहुः । ( नं ) न सहस्रेऽधि किं चन दद्यात्सहस्रेण ह्येव सर्वान्कामानाप्नोतीति तदु होवाचासुरिः काममेव दद्यात्सहस्रेणाह सर्वान्कामानाप्नोति काममनोऽस्येतरद्दत्तं भवतीति ॥ १४ ॥

( त्य ) अथ यदि रथं वा युक्तं दास्यन्त्स्यात् । ( ब्र ) यद्वा वशायै वा वपायाᳫं हुतायां दद्यादुदवसानीयायां वेष्टौ ॥ १५ ॥

स वै दक्षिणा नयन् । ( त्व ) अन्यूना दशतो नयेद्यस्माऽएकां दास्यन्त्स्याद्दशभ्यस्तेभ्यो दशतमुपावर्तयेद्यस्मै द्वे दास्यन्त्स्यात्पञ्चभ्यस्तेभ्यो

---

तदाहुः—न सहस्रेऽधि किंचन दद्यात् सहस्रेण ह्येव सर्वान्कामानाप्नोतीति । तदुहोवाचासुरिः—काममेव दद्यात् । सहस्रेणाह सर्वान्कामानाप्नोति । काममेनोऽस्येतरद्दत्तं भवतीति ॥ १४ ॥

अथ यदि रथं वा युक्तं दास्यन्त्स्यात्, यद्वा वशायै वा, वपायां हुतायां दद्यात्, उदवसानीयायां वेष्टौ ॥ १५ ॥

स वै दक्षिणा नयन्, अन्यूना दशतो नयेत् । यस्माऽएकां दास्यन्त्स्याद् दशभ्यस्तेभ्यो दशतमुपा-

---

नयनो नयन तु वेद्यन्निगता सहिताना त्रयाणा शतानां संहितानामेवेति द्रष्टव्यम् । तत्र तु प्रकृतशतविभागानुसारेण मुख्यर्थैकीकृत्य चतमश्चतस्रो दशतोऽर्पणीया प्रपद्यन्ते । एतेनुस्तिस्रो दशत सम च त्रिभागोनगाव. प्राप्नुवन्ति । तस्य हि साहस्र्या संहिते एकादशकार्गमिष्यते । ततश्च तृतीयिनामिहास्यैषो सदर्पणीया प्राप्नोति । अर्धिना तु द्वे द्वे दशतावन्येन एव ( प्राप्नुनायाईचिवैका तृतीयिना सत्रिभागा त्रयोदशैकादशस्रोको कसा प्राप्नुवन्ति ) ततश्शतमर्पयित्वा पुनस्त्रयाणामेकादशतमर्पयेत्, चतुर्होत्रा सह पूर्णमर्पयेदित्येव प्राकृतविभागेनार्पणे प्रसज्यमाने आह—यस्मा एकामेकादशते आह—होता हि साहस्र सत्युक्थे बृहतीनां सहस्रमर्हतीति साहस्र. य ऋत्विक् सन्निपुत्रेना सन्निन्यर्थ । स ऋत्विक्शब्द उद्देतुर्लक्षणार्थः । इतरथा तु बहव एव ऋत्विजो नाश्रयन्ति तेषामपि बृहती स्यात् । ' तदाहुर्न सहस्रे ' दीयमानेऽधिकमश्वादिकं प्रतिषिध्यते तेन विनैव क्रतुफलं सिद्ध्यतीत्येनदर्शयति ' सहस्रेण ह्येव काममेव ' ददाति विविधसामर्थ्याद्विशेष । तदाह-सत्य तावत् सहस्रेणैव ' सर्वान्कामानाप्नोति ' ' कामेन ' एव इच्छयाऽस्य यजमानस्येतरद्दत्तं भवति ( न च निष्फले दाने एव युक्ता तत्र भूमेच्छया ' इतरदत्त भवति ' इत्युक्तमभूदत एवं सिद्धे नान्य एवेत्यभिप्राय. ) ॥ १४ ॥

अथेति । ' अथ यदि ' रथाधिकारार्थं वा युक्त यद्वान्यत्किञ्चिद्यदि ' दास्यन्त्स्यात् ' ततो वशायै वपायां ' दद्यादुदवसानीयाया वेष्टौ ' । सूत्रकारेणात्र " साहस्रीमेव तद्दानी " त्युक्तम् । तच्छु यन्तरतो ज्ञेयम् ॥ १५ ॥

स वै दाक्षिणेति । स वै यजमानकाल इत्यर्थ. । नयनेन दान लक्ष्यते किं कारणम् । त्रीणि च शतानि नयति त्रयस्त्रिंशमेवेति ।(त्रयस्त्रिंशानामन्यूनामिदंशभिर्नेतुमशक्यत्वात् । तस्माद्दार्थ्यधि दक्षिणा इत्य भाष्ये व्याख्या-

---

१-अनुरथ्यस्त्राहोमन्ते दद्यादेनाम् । एता दशमामिति सूत्रशेष । उदवसानीयायां वा । अन्यदिच्छन् । का श्रौ सू १२।८२-८४

दशतमुपावर्तयेद्यस्मै तिस्रो दास्यन्त्स्युस्त्रिभ्यस्तेभ्यो दशतमुपावर्तयेद्यस्मै पञ्च दास्यन्त्स्युर्द्वाभ्यां ताभ्यां दशतमुपावर्तयेदेवमाशतात्तथो हास्यैषाऽन्यूना विराडमुष्मिँल्लोके कामदुघा भवति ॥ १६ ॥

इति चतुर्थप्रपाठके नवमं ब्राह्मणम् ॥ ९ ॥ (९.८.) ॥

चतुर्थः प्रपाठकः ॥ कण्डिकासंख्या ॥ १२९ ॥

---

वर्तयेत्। यस्मै द्वे दास्यन्त्स्यात्-पञ्चभ्यस्तेभ्यो दशतमुपावर्तयेत्। यस्मै तिस्रो दास्यन्त्स्यात्-त्रिभ्यस्तेभ्यो दशतमुपावर्तयेत्। यस्मै पञ्च दास्यन्त्स्यात्-द्वाभ्यां ताभ्यां दशतमुपावर्तयेत्। एवमाशतात्। तथो हास्यैषाऽन्यूना विराडमुष्मिँल्लोके कामदुघा भवति ॥ १६ ॥

इति गर्गत्रिरात्रम्।

---

पूर्वं कर्तव्या।) 'यस्मा एकाम्' इत्यादि। तत्रैतावानेवार्थो विधेयो दशभ्यो मुख्यादिभ्यो 'दशतमुपावर्तयेत्' अर्धयेत् पुनः पञ्चभ्यस्तेभ्यो मुख्येभ्य एकादशतमुपावर्तयेदित्येतदपि प्राप्नोति तथाप्यर्थविरोधान्न भवति। पञ्चदशतमित्येतदेव भवति पञ्चभ्य एकैकस्मै द्विभ्य एकादशापनसामर्थ्यात्। ततस्त्रिभ्य उपावर्तयेत्प्रशास्तृ प्रस्तोतृभ्यो तिस्रस्तिस्र उद्गात्रे चतस्र इत्येवं ततो द्वाभ्यां दशतमुपावर्तयेत् होतृभ्यर्युभ्यां यतो 'यस्मै' वमाशतात् दशभ्यः पञ्चदशभ्यो दशतमुपावर्तयेदिति प्राप्नोति तथाप्यविरोधात् त्रिभ्य एव दशतमुपावर्तयेत् कथं नु नवमदशमाभ्यामिति तिस्रस्तिस्रो होत्रे च तिस्रः पुनः पाकादिभ्य स्तिस्र इति तिस्रोऽध्वर्यवे चतस्रः पुनरपि या दिशो तिस्रस्तिस्रो नेष्टू चतस्र इ येवं चार्तास्तु तावन्तो प्रतिमहमन्त्रः सकृदेव हि प्राकृतेन क्रमेण भूयुः। यास्तु तास्त्वर्थत्रिशतानो तिस्रो होत्र उन्नेत्रे वा स्यात्तिस्रा दशकर्मैकसंख्यादिभ्यो वा चतुष्कलो मावस्तुद्वय एवोन्नेतारं तत्रोन्नेतावेशो भग्यात् दशरात्रे सहस्या सह दास्यते। यदि तून्नेत्रे दास्यते तेन उत्तमेऽहन्यमयं शतं दद्युन्नेत्रे द्वे एव दद्यात् (ज्योष्टुतं पञ्चमं) द्वितीयं तु शतं दद्याद्ग्रावस्तुते नेष्टे च पञ्चमं दद्यादुन्नेतारमन्तरा। यदेव तृतीये पुनः शते दीयमाने नेष्टू दद्यावन्तो ग्रावस्तुते नयेदेवोन्नेतारमन्तरेण तथोऽनेन सादयित्रे उन्नेत्रे तामथैकादशतं दद्यादित्येषा कर्मयोजना। अत्र च यस्मादित्येकानित्येकसंप्रदान यच्छब्देनोद्दिश्यते 'तेभ्य' इति बहुवचनात् तेन परामृशति तद् विरुद्धमिति सामर्थ्याद्यस्मै एकामेको दास्यन्स्यादित्यभ्यासो द्रष्टव्यः। एवमुत्तरत्रापि द्रष्टव्यम्। एवमपि च प्रतिदं तेन संप्रदानस्योल्लभनमुपपद्येत। न चैका देया कस्मैचिदित्येतदस्त्यपि प्रतिदं कथं तेन पुरुषा उपलभ्यन्ते। सत्यमेतत् किन्तु उपलभ्यमान्यत्वानुगत्यैकादशतो विधिर्योऽत्र द्रष्टव्यः। एकानेकानेकस्मै दद्यात्तेभ्यश्च तानेकैकां दद्यात् तेभ्यस्तामेवं दशतं कृत्वा दद्यात्। येन पृथक् पृथगेव यस्मै द्वे दास्यन्स्यादित्यादि योज्यम्। अथवा दशभ्यो दशतं दित्सन्यदिव तेभ्य एकैको दास्यन् भवतीत्यनुवादो वाऽयम्। एवं यस्मै पंचेत्यादि। ननु पञ्चभ्यो दशतं दित्सन्सन्निरोधातो द्वे द्वे दास्यन् भवति। कदाचिद्विषडेकस्मै दद्यादथ शतस्य वा एकैकापेक्षमपि पञ्चभ्य एव दशको दत्तो भवति; नैतदेवं समं स्यात्स्तुतत्वादिति दशतो न्यायेन समो

विभागः प्राप्नोति । तस्माद्दशभ्यो दशत दद्याद्यत. पञ्चभ्यश्चनसूभ्यस्ततो द्वाभ्यां पुनर्थैव यथासंभवमाशतादित्येतावदेवात्र विधीयते । ( यस्माच्चप्रैषनुमित्यनुवाद. ) तथा क्रियमाणस्य यजमानस्यैष दशात्मिका विराड्वर्तते शतानि नव दशन्यूनानि तेषामेकैकस्मिन् दशतस्ता ' अन्यूना ' विराडभियज्ञमुपात्ताऽमुष्मिल्लोके तादृश्येव ' कामदुधा भवति । ( विराजो एषैव सर्व एव दोहो व्यजने ( ? ) कामा इत्यभिप्रायः ) ॥ १६ ॥

इति श्रीहरिस्वामिन. कृतौ माध्यन्दिनशतपथब्राह्मणभाष्ये चतुर्थकाण्डे पञ्चमेऽध्याये

अष्टमं ब्राह्मणम् ॥ ( ४ । ९ । ८ ) ॥

---

१–अथ गर्गत्रिरात्रादौ सहस्रदक्षिणाके यज्ञे गोसाहस्री दक्षिणाविभाग ॥ दशदशाभेदेन दक्षिणा दद्यात् । अनूबंध्यवपाहोमाते दद्यादेताः । ८२ । वदवसानीयाया वा । ८३ । अन्यदिच्छन् । ८४ । गर्गत्रिरात्रादेः सहस्रदक्षिणाकस्य यज्ञस्य त्र्यहसाध्यत्वेन विभज्यदानमन्वहमुक्त । तत्र प्रतिदिन त्रयस्त्रिंशदधिकशतत्रय गवा दातव्य भवति । तत्र च दशदश गाः सख्याय षोडशत्विग्भ्यो दातव्या । तत्रचाय क्रम । १ प्रथमत एक दशक गृहीत्वा ब्रह्मो १ द्गातृ २ होत्र ३ ध्वर्यु ४ ब्राह्मणाच्छसि ५ प्रस्तोतृ ६ मैत्रावरुण ७ प्रतिप्रस्थातृ ८ पोतृ ९ प्रतिहर्तृभ्यो १० दशभ्य ऋत्विग्भ्यः एकैकां गा दद्यात् । इति प्रथम दशक । १० । २ द्वितीय दशक प्रथमदशकवद्देय । ३ तृतीय दशक द्वे द्वे गावौ इति पञ्चधा गवां विभाग ब्राह्मणाच्छसि १ प्रस्तोतृ २ मैत्रावरुण ३ प्रतिप्रस्थातृ ४ पोतृभ्य ५ पञ्चभ्य द्वे द्वे दद्यात् । ४ चतुर्थं दशक तृतीयदशकवत् पञ्चधा विभाग. पञ्चभ्यो दानच । पञ्चानां दाने क्रम । ब्राह्मणाच्छसि १ प्रस्तोतृ २ मैत्रावरुण ३ प्रतिप्रस्थातृ ४ प्रतिहर्तृभ्य. ५ ( इति पञ्चभ्यो ) द्वे द्वे दद्यात् । ५ पञ्चम दशक चतस्र ४ तिस्र. ३ तिस्र. ३ इति वैषम्येण विभाग । अच्छावाकाय चतस्र ४ आग्नीध्रे तिस्र ३ । सुब्रह्मण्याय तिस्र ३ । इति त्रिभ्यो दान । ६ षष्ठ दशक पञ्चमदशकवत् वैषम्येण विभाग. । ४ । ३ । ३ । इति । नेष्ट्रे चतस्र.४ । ग्रावस्तुते तिस्र ३ । उन्नेत्रे तिस्र ३ । इति त्रिभ्यो दान । ७ सप्तम दशक द्वेधा विभाग । २ पञ्च ५ । पञ्चेति । ब्रह्मणे पञ्च ५ उद्गात्रे पञ्च ५ । इति द्वाभ्या दान । ८ अष्टम दशक सप्तमदशकवत् पञ्च पञ्चेति द्वेधा विभागः । ब्रह्मणे ५ उद्गात्रे ५ इति द्वाभ्या दान । ९ नवम दशक द्वेधा विभाग । २ । होत्रे पञ्च ५ । अध्वर्यवे पञ्च ५ । इति द्वाभ्या दान । १० दशम दशक नवमदशकवत् द्वेधा विभाग २ होत्रे ५ अध्वर्यवे ५ इति द्वाभ्या दान । एवमेकगोशतविभाग. । १०० । एवमेव द्वितीयगोशतौ १०० । तृतीयगोशतोच । १०० । एव त्रिशती । ३०० । १ अथ त्रयस्त्रिंशदुर्वरिता. । ३३ । तत्रैक दशक । १० । प्रथमदशकवत् ब्रह्मादिप्रतिहर्तृभ्यो दशर्त्विग्भ्य एकैका दद्यात् । २ द्वितीय दशक प्रथमदशकवत् ब्रह्मादिप्रतिहर्तृभ्यो दशर्त्विग्भ्य एकैका दद्यात् । ३ तृतीय दशक । द्वे द्वे इति पञ्चधा विभाग. । ५ । ब्राह्मणाच्छसि १ प्रस्तोतृ २ मैत्रावरुण ३ प्रतिप्रस्थातृ ४ प्रतिहर्तृभ्य- ५ इति पञ्चभ्यो द्वे द्वे दद्यात् । तिस्रस्तिस्र परिशिष्यते ता अत्र न देया. । इति प्रथमाह । अथ द्वितीयेऽहनि । एवमेव शतत्रयीदान । त्रयस्त्रिंशन्मध्ये तु । १ प्रथम दशक पञ्चधा विभज्य । ब्राह्मणाच्छसि १ प्रस्तोतृ २ मैत्रावरुण ३ प्रतिप्रस्थातृ ४ प्रतिहर्तृभ्यो ५ द्वे द्वे दद्यात् । २ द्वितीय दशक चतस्र ४ तिस्र. ३ तिस्र ३ । इति वैषम्येण त्रेधा विभाग. । नेष्ट्रे चतस्र ४ । ग्रावस्तुते तिस्र ३ । उन्नेत्रे तिस्र ३ । इति त्रिभ्यो दान । तृतीय दशक पञ्चधा विभज्य ब्राह्मणाच्छसि १ प्रस्तोतृ २ मैत्रावरुण ३ प्रतिप्रस्थातृ ४ प्रतिहर्तृभ्यो द्वे द्वे दद्यात् । तृतीयेऽहनि । शतत्रयीदान पूर्ववत् । त्रयस्त्रिंशन्मध्ये तु । १ प्रथम दशक पञ्च ५ पञ्चेति द्वेधा विभाग । २ । ब्रह्मणे पञ्च ५ उद्गात्रे ५ इति द्वाभ्या दान । २ द्वितीय दशक प्रथमदशकवत् द्वेधा विभाग । ब्रह्मोद्गातृभ्या द्वाभ्या च दान । ३ तृतीय दशक पञ्च ५ पञ्चेति द्वेधा विभज्य । अध्वर्यवे पञ्च दत्वा पुनस्तस्मा एव पञ्च दद्यात् । इति एकस्मै १ दान । तत- सर्वेषा यास्तिस्रस्तिस्रोऽवशिष्टा । ता सर्वा आदाय । तासु नवसु सप्तमासु । इमां साहस्रीं दशमी कृत्वा । तद्दशक । अनूबन्ध्यवपाहोमान्ते । वदवसनीयायामिष्टौ वा होत्रे दद्यात् । अथवा पक्षान्तरम् । अस्मिन्पक्षे द्वावुन्नेतारौ कृत्वा । तयोर्मध्ये य आश्रावण न करोति तस्मै एतद्दशक अनूबन्ध्यवपाहोमान्ते वदवसानीयायां वा दद्यादिति पक्षांतरं । अस्मिन्नपरे पक्षे प्रथमेऽह्नि ५ शतत्रयीदानान्ते त्रयस्त्रिंशत्सु ये द्वे गावौ होतुर्भागौ भवत । ते उन्नेत्रे दद्यात् । न होत्रे । द्वितीयेऽहनि २ त्रयस्त्रिंशत्सु यास्तिस्र उन्नेतुर्भागा भवन्ति । ता होत्रे दद्यात् । नोन्नेत्रे । तृतीयेऽह्नि त्रयस्त्रिंशत्सु यास्तिस्र उन्नेतुर्भागा भवति । ता प्रतिशतकं होत्रे देया । इति गोसाहस्रीदक्षिणाविभाग । तथाऽत्र देवयाज्ञिक.–दशभ्यो दशकौ दत्वा चतुर्भ्योऽष्टौ च पञ्चकात् ॥ द्विकेन पूरयेत् षड्भ्य. षड्भ्यो द्विकमिति स्थितिरिति । १ । यदत्र श्लोके क्रमान्तर तच्छ्रुतिविरोधान्नादर्तव्य । दानं तु श्रुत्युक्तेनैव कर्तव्य । श्रुत्युक्त क्रमस्तु प्रथममेकैकस्याः १ ततो द्वयोर्द्वयोः २ ततस्तिसृणां तिसृणां ३ ततः पञ्चाना पञ्चानामिति । ५ इति श्रुत्युक्तः क्रम. । श्लोकोक्तः क्रमस्तु एकैकदानानन्तरं पञ्चभ्यो दानमभिद्विकमिति श्लोकोक्त. क्रमः । का. श्रौ. सू. । १३ । ८१ ।

तद्यत्रैतद्द्वादशाहेन व्यूढच्छन्दसा यजते । तद्ग्रहान्व्यूहति व्यूहतऽउद्गाता च होता च च्छन्दाꣳसि स ऽएष प्रज्ञात ऽएव पूर्वस्त्र्यहो भवति समूढच्छन्दास्तदैन्द्रवायवाग्रान्गृह्णाति ॥ १ ॥

( त्यु ) अथ चतुर्थेऽहन्व्यूहति । ग्रहान्व्यूहन्ति च्छन्दाꣳसि तदाग्रयणाग्रान्गृह्णाति प्राजापत्यं वाऽएतच्चतुर्थमहर्भवत्यात्मा वाऽआग्रयण आत्मा वै प्रजापतिस्तस्मादाग्रयणाग्रान्गृह्णाति ॥ २ ॥

व्यूढद्वादशाहः ।

तद् यत्रैतद् द्वादशाहेन व्यूढच्छन्दसा यजते—तद्ग्रहान्व्यूहति । व्यूहत उद्गाता च होता च छन्दांसि । स एष प्रज्ञात एव पूर्वस्त्र्यहो भवति समूढच्छन्दाः । तदैन्द्रवायवाग्रान्गृह्णाति ॥ १ ॥

अथ चतुर्थेऽहन्व्यूहति । ग्रहान् व्यूहन्ति छन्दांसि । तदाग्रयणाग्रान्गृह्णाति । प्राजापत्यं वाऽएतच्चतुर्थमहर्भवति । आत्मा वाऽआग्रयणः । आत्मा वै प्रजापतिः । तस्मादाग्रयणाग्रान्गृह्णाति ॥ २ ॥

तद्यत्रैतद्द्वादशाहेनेति 'व्यूढच्छन्दसा' दशरात्रस्य चतुर्थनवमयोरह्नोर्द्वारा ग्रहाणामाग्रयणः पूर्वं ग्रहीतव्यः । षष्ठसप्तमयोस्तु शुक्रस्तान्द्वाराणीयो 'यावत् पूर्वं ग्रहा गृहीतास्ततः परिमृज्य सादनीयाः । आग्रयणस्तु हिंकृत्य सादनीयः । वैराजा व्यूढच्छन्दांस्यपि दशरात्रे ग्रहा व्यूहनीया इत्येतदत्र ब्राह्मणे विधीयते । 'एतत्' इति श्रुत्यन्तप्रसिद्धम् । द्वादशाहेन यजने प्रत्यक्षवदुत्तरविवक्षया परामृशति । तत्तत्र ग्रहानेवाध्वर्युर्वैकृतमणं व्यूहति । आग्रयणादीनामन्यस्य स्थान भवति होतोद्गातारौ अपि तत्र च्छन्दांसि व्यूहन्तौ अन्योन्यस्य स्थान नयतः स एवार्यज्ञा प्रसिद्ध एवाधिकृत पूर्वं प्रथमस्त्र्यहः 'प्रज्ञात' त्रिको भवति । कीदृशः समूढं ( छन्दहोतॄणाम् ) तत्राध्वर्युरप्यैन्द्रवायवानेवाधिकृतान् गृहान् गृह्णातीत्युत्तरविवक्षयाऽनुवादः । अनुवादत्वादेव बादरोत्रिरहस्त्र्यह इति गम्यते । होतुरुद्गातॄणां द्विदशरात्रं चतुर्थादहोरात्र्याल्यो द्वादशाहस्य ॥ १ ॥

अथ चतुर्थ इति 'चतुर्थे' अहनि इह सत्रस्य 'व्यूहति' ग्रहानध्वर्युः । ते "धारयन्त एवं" ति

१ अहनि व्यूढच्छन्दसि दशरात्रस्य चतुर्थनवमयो रन्ह्णोराग्रयणग्रहणं प्रथमं । द्वादशाहो द्विधा । व्यूढच्छन्दाः १ समूढच्छन्दाश्चे २ ति । स्वस्वस्थानविपर्यस्तत्वेन ऊढानि स्थानान्तरे प्रापितानि छन्दांसि यस्मिन् द्वादशाहे सोऽयं व्यूढच्छन्दाः । इति सायण । ४।४।५ । ऐ० ब्रा० ) यथोदाहरणं । ज्योतिष्टोमे प्रातःसवने गायत्रं छन्दः । माध्यंदिने त्रिष्टुप्छन्दः । तृतीयसवने च जगतीछन्दः । तत्र माध्यंदिनसवनीयत्रिष्टुप्स्थाने प्रातःसवनिका गायत्री पठ्यते । तार्तीयसवनजगतीस्थाने माध्यंदिनसवनिका त्रिष्टुप् पठ्यते । प्रातःसवनिकागायत्रीस्थाने तार्तीयसवनिका जगती पठ्यते । इदमेव छन्दसां व्यूहनं । तदेतद्व्यूहनं होतुरुद्गातुश्च विहितं सूत्रे । व्यूढच्छन्दसीत्युक्तेः । समूढच्छन्दसि नैतच्छन्दोव्यूहनं । साम्येन ऊहो यत्र स समूढः । वैषम्येनोहो यत्र स व्यूढः । द्वादशाहे द्वादशस्वपि अहःसु ग्रहाग्रता विहिता । तत्र ग्रहाग्रता नाम अनेकेषु ग्रहेषु गृह्यमाणेषु प्रथमं यस्य ग्रहस्य ग्रहणं सा तद्ग्रहाग्रता । यथा अस्मिन्नेव ब्राह्मणे त्रयोदश्यां कण्डिकायामुक्ता । प्रातःसवने ऐन्द्रवायवाग्राः । माध्यंदिने शुक्राग्राः । तृतीये आग्रयणाग्राः । इमे ग्रहाग्रतोहाः साम्येन यस्मिन् स समूढः । इमे ग्रहाग्रतोहाः व्यूढछन्दस्यपि भवति । अव्यूढो वा ( १२ । १२५ ) इति कात्यायनसूत्रात् । तत्र द्वादशाहस्याहीनस्य व्यूढछन्दसो दशरात्रस्यायं क्रमः । चतुर्थनवमयोरन्ह्णोराग्रयणाग्राः । षष्ठसप्तमयोः शुक्राग्राः । पञ्चमनवमयोरैन्द्रवायवाग्राः । तृतीयं नवमं चाहः प्रज्ञातमिति शब्देनोच्यते । तथा च सूत्रं । शुक्रस्य षष्ठसप्तमयोरिति । ( १२ । १२२ ) असादनमापूर्वेषां ग्रहणात् । पूर्वेषां ग्रहणादर्वाक् शुक्रस्याग्रयणस्य च स्वस्वस्थाने नासादनं किंतु उभयोः परिमार्जनप्रभृति कृत्वा प्राकृते काले आसादनं कर्तव्यं तदप्यासादनं यस्य हिंकारो विहितः । तस्य हिंकृत्यासादनं । इतरस्य तु अहिंकृत्यैवासादनं । तथा च सूत्रं । परिमार्जनप्रभृतिकाले हिंकृत्य सादनमिति । का. श्रौ. सू. १२ । १२१–१२४ ।

तं गृहीत्वा न सादयति । प्राणा वै ग्रहा नेत्प्राणान्मोहयानीति मोहयेद्ध प्राणान्यत्सादयेत्तं धारयन्त ऽएवोपासतेऽथ ग्रहान्गृह्णात्यथ यदा ग्रहान्गृह्णात्यथ यत्रैवैतस्य कालस्तदेनᳫं हिङ्कृत्य सादयत्यथैतत्प्रज्ञातमेव पञ्चममहर्भवति तदैन्द्रवायवाग्रान्गृह्णाति ॥ ३ ॥

( त्यु ) अथ षष्ठेऽहन्व्यूहति । ग्रहान्व्यूहन्ति च्छन्दाᳫंसि तच्छुक्राग्रान्गृह्णात्यैन्द्रं वाऽएतत्षष्ठमहर्भवत्येष वै शुक्रो य एष तपत्येष उऽएवेन्द्रस्तस्माच्छुक्राग्रान्गृह्णाति ॥ ४ ॥

तं गृहीत्वा न सादयति । प्राणा वै ग्रहा नेत्प्राणान्मोहयानीति मोहयेद्ध प्राणान्यत्सादयेत्तं धारयन्त ऽएवोपासतेऽथ ग्रहान्गृह्णात्यथ यदा ग्रहान्गृह्णात्यथ यत्रैवैतस्य कालस्तदेनᳫं सादयति ॥ ५ ॥

---

तं गृहीत्वा न सादयति । प्राणा वै ग्रहाः । नेत्प्राणान्मोहयानीति । मोहयेद्ध प्राणान् यत्सादयेत् । तं धारयन्त एवोपासते, अथ ग्रहान्गृह्णाति अथ यदा ग्रहान्गृह्णाति, अथ यत्रैवैतस्य कालः—तदेनं हिङ्कृत्य सादयति । अथैतत् प्रज्ञातमेव पञ्चममहर्भवति । तदैन्द्रवायवाग्रान्गृह्णाति ॥ ३ ॥

अथ षष्ठेऽहन्व्यूहति ग्रहान्, व्यूहन्ति छन्दांसि तच्छुक्राग्रान्गृह्णाति । ऐन्द्रं वाऽएतत्षष्ठमहर्भवति । एष वै शुक्रः य एष तपति । एष उऽएवेन्द्रः । तस्माच्छुक्राग्रान्गृह्णाति ॥ ४ ॥

तं गृहीत्वा न सादयति । प्राणा वै ग्रहाः । नेत्प्राणान्मोहयानीति । मोहयेद्ध प्राणान् यत्सादयेत् । तं धारयन्त एवोपासते, अथ ग्रहान्गृह्णाति । अथ यदा ग्रहान्गृह्णाति, अथ यत्रैवैतस्य कालः—तदेनं सादयति ॥ ५ ॥

---

प्रयोगान्तर धारयदभिप्राय बहुवचनमेक एवात्र धारणात् । अथ यदाग्रहानिति येन तस्मादाग्रयणाद्धूर्वं चैन्द्रवायवादय ॥ २ ॥ ३ ॥

अथ षष्ठ इति । मन्त्रो ब्राह्मण एष प्रायेण बार्हतः । बृहत्या आयतन बृहतीति छन्दांस्यनुसपद्यन्ते । एवं जागतमपि द्रष्टव्यम् । अङ्गानि वै ग्रहा इति सत्य प्राणा ग्रहा एव प्राणाः स्वायतनानि नयनगोलकादीनि हित्वाऽन्यत्रैव वर्तन्ते तथापि तु यानि तान्यङ्गानि नयनगोलकादीनि तान्यपि प्राणायतनत्वात् ग्रहा एव तानि च पुरुषविधानि अन्यस्यान्य निक्षिप्य शेषेषु व्याक्षिप्यमाणेषु प्राणानपि व्यत्यस्यात् तस्मादस्य समस्तशारीरिकानां ग्रहाणां व्यत्यास इत्यधियाज्ञिकानामपि युक्तावत्रैव ग्रहानिति पुनर्वचन । किन्तु तत्राध्वर्योरित्येतदनोरस्मार्थं, किन्तु तत्राध्वर्योरिति । यदध्वर्युर्ग्रहान्व्यूहतीतरो च छन्दांसि व्यूहतः । ततः कथ यज्ञस्य समपाम्यामसंस्तुत भवति । ( सामो मूर्त्तिस्त्रिरपि भवतीयमरीति प्रश्न एतद्वाऽध्वर्युरिति प्रतिवचनम् ) ॥ ४ ॥

( त्यु ) अथ सप्तमेऽहन्व्यूहति । ग्रहान्व्यूहन्ति च्छन्दाᳫँसि तच्छुक्राग्रान्गृह्णाति बार्हतं वाऽएतत्सप्तममहर्भवत्येष वै शुक्रो य एष तपत्येष उऽएव बृहंस्तस्माच्छुक्राग्रान्गृह्णाति ॥ ६ ॥

तं गृहीत्वा न सादयति । प्राणा वै ग्रहा नेत्प्राणान्मोहयानीति मोहयेद्ध प्राणान्यत्सादयेत्तं धारयन्तऽएवोपासतेऽथ ग्रहान्गृह्णात्यथ यदा ग्रहान्गृह्णात्यथ यत्रैवैतस्य कालस्तदेनᳫँ सादयत्यथैतत्प्रज्ञातमेवाष्टममहर्भवति तदैन्द्रवायवाग्रान्गृह्णाति ॥ ७ ॥

( त्यु ) अथ नवमेऽहन्व्यूहति । ग्रहान्व्यूहन्ति च्छन्दाᳫँसि तदाग्रयणाग्रान्गृह्णाति जागतं वाऽएतन्नवममहर्भवत्यात्मा वाऽआग्रयणः सर्वं वाऽइदमात्मा जगत्तस्मादाग्रयणाग्रान्गृह्णाति ॥ ८ ॥

तं गृहीत्वा न सादयति । प्राणा वै ग्रहा नेत्प्राणान्मोहयानीति मोहयेद्ध प्राणान्यत्सादयेत्तं धारयन्त एवोपासते ऽथ ग्रहान्गृह्णात्यथ यदा ग्रहान्गृह्णात्यथ यत्रैवैतस्य कालस्तदेनᳫँ हिङ्कृत्य सादयति ॥ ९ ॥

तदाहुः । ( नं ) न व्यूहेद्ग्रहान्प्राणा वै ग्रहा नेत्प्राणान्मोहयानीति मोहयेद्ध प्राणान्यद्व्यूहेत्तस्मान्न व्यूहेत् ॥ १० ॥

( न ) तद्व व्यूहेदेव ( वाऽ ) अङ्गानि वै ग्रहाः कामं वाऽइमान्यङ्गानि व्यत्यासᳫँ शेते तस्माद्व्यूहेदेव ॥ ११ ॥

---

अथ सप्तमेऽहन्व्यूहति ग्रहान् व्यूहन्ति छन्दांसि तच्छुक्राग्रान्गृह्णाति । बार्हतं वाऽएतत्सप्तममहर्भवति । एष वै शुक्रो य एष तपति । एष उऽएव बृहन् । तस्माच्छुक्राग्रान्गृह्णाति ॥ ६ ॥

तं गृहीत्वा न सादयति । प्राणा वै ग्रहाः । नेत्प्राणान्मोहयानीति । मोहयेद्ध प्राणान् यत्सादयेत् । तं धारयन्त एवोपासते, अथ ग्रहान्गृह्णाति । अथ यदा ग्रहान्गृह्णाति, अथ यत्रैवैतस्य कालः—तदेनं सादयति । अथैतत्प्रज्ञातमेवाष्टममहर्भवति । तदैन्द्रवायवाग्रान्गृह्णाति ॥ ७ ॥

अथ नवमेऽहन् व्यूहति ग्रहान्, व्यूहन्ति छन्दांसि । तदाग्रयणाग्रान्गृह्णाति । जागतं वाऽएतन्नवममहर्भवति । आत्मा वा आग्रयणः, सर्वं वाऽइदमात्मा जगत् । तस्मादाग्रयणाग्रान्गृह्णाति ॥ ८ ॥

तं गृहीत्वा न सादयति । प्राणा वै ग्रहाः । नेत्प्राणान्मोहयानीति । मोहयेद्ध प्राणान्—यत्सादयेत् । तं धारयन्त एवोपासते, अथ ग्रहान्गृह्णाति अथ यदा ग्रहान् गृह्णाति, अथ यत्रैवैतस्य कालः—तदेनं हिंकृत्य सादयति ॥ ९ ॥

तदाहुः—न व्यूहेद्ग्रहान् । प्राणा वै ग्रहाः । नेत्प्राणान्मोहयानीति । मोहयेद्ध प्राणान्—यद्व्यूहेत् । तस्मान्न व्यूहेत् ॥ १० ॥

तद्व व्यूहेदेव । अङ्गानि वै ग्रहाः । कामं वाऽइमान्यङ्गानि व्यत्यासं शेते । तस्माद्व्यूहेदेव ११

तदु नैव व्यूहेत् । (त्प्रा) प्राणा वै ग्रहा नेत्प्राणान्मोहयानीति मोहयेद्ध प्राणान्यद्व्यूहेत्तस्मान्न व्यूहेत् ॥ १२ ॥

(त्कि) किं नु तत्राध्वर्योः । (र्य) यदुद्गाता च होता च च्छन्दांꣳसि व्यूहत एतद्वाऽअध्वर्युर्व्यूहति ग्रहान्यदैन्द्रवायवाग्रान्प्रातःसवने गृह्णाति शुक्राग्रान्माध्यन्दिने सवनऽआग्रयणाग्राꣳस्तृतीयसवने ॥ १३ ॥

इति पञ्चम प्रपाठके प्रथमं ब्राह्मणम् ॥ १ ॥ (५. ९. ॥)

यदि सोममपहरेयुः । (र्वि) विधावतेच्छतेति ब्रूयात्स यदि विन्दन्ति किमाद्रियेरन्यद्यु नु विन्दन्ति तत्र प्रायश्चित्तिः क्रियते ॥ १ ॥

द्वयानि वै फाल्गुनानि । लोहितपुष्पाणि चारुणपुष्पाणि च स यान्यरुण-

---

तदु नैव व्यूहेत् । प्राणा वै ग्रहाः नेत्प्राणान्मोहयानीति । मोहयेद्ध प्राणान्–यद्व्यूहेत् । तस्मान्न व्यूहेत् ॥ १२ ॥

किं नु तत्राध्वर्योः–यदुद्गाता च होता च छन्दांसि व्यूहतः । एतद्वाऽअध्वर्युर्व्यूहति ग्रहान्–यदैन्द्रवायवाग्रान्प्रातः सवने गृह्णाति, शुक्राग्रान्माध्यन्दिने सवने, आग्रयणाग्रान् तृतीयसवने ॥ १३ ॥

यदि सोममपहरेयुः विधावतेच्छतेति ब्रूयात् । स यदि विन्दन्ति किमाद्रियेरन् । यद्यु न विन्दन्ति–तत्र प्रायश्चित्तिः क्रियते ॥ १ ॥

द्वयानि वै फाल्गुनानि–लोहितपुष्पाणि चारुणपुष्पाणि च । स यान्यरुणपुष्पाणि फाल्गुनानि

---

इति श्री हरिस्वामिन कृतौ माध्यन्दिनशतपथब्राह्मणभाष्ये चतुर्थकाण्डे

पञ्चमेऽध्याये बार्हत नाम नवमं ब्राह्मणम् ॥ ( ४ । ५ । ९ ) ॥

यदि सोममिति । अत्र ब्राह्मणे सोमापहारे तत्प्रतिनिधिनियमो गम्यते । कलशभेदसोमातिरेकयोश्च प्रायश्चित्तमुच्यते । ( यद्यपहारयुक्तस्वरा. सोममतिद्रष्टव्यम् ) । स्वीकृतस्य प्रयोगापहारोपपत्तेरक्रीतस्तु सोमविक्रयिणो यदि ह्रियते तेन यजमानस्याभिध्यानादिति विपत्तिनिमित्ता तु कालाहुतिं हुत्वाऽयं क्रेतव्यः ' यदि विन्दन्ति ' तमेवोपहृत न सोमान्तरमपि कुतस्तस्यालाभे प्रायश्चित्तानुपपत्ते. ॥ १ ॥

द्वयानि वा इति ' द्वयानि, द्विभागानि ' फाल्गुनानि ' अर्जुनाख्यानि । कथम् द्विभागानि लोहितपुष्पाणि

---

१–सोमापहरणे विधावतेच्छथेति ब्रूयात् । अध्वर्युः । बहुविषयत्वात्प्रेषणस्येति कर्कः । शत्रुणा सोमापहरणे कृते यजमान पुरुषान् प्रेष्येत् । त्वरया गच्छत, अन्वेषयत, इति प्रैषद्वयार्थं । अदर्शनेऽरुणपुष्पाण्यर्जुनान्यभिषुणुयात् । अर्जुनशब्दस्तृणवाचकः । सर्व फाल्गुन घासो यवस तृणमर्जुनमित्यभिधानात् । पुनमपि निर्विरयं । तत्र सोमशब्देनोपलक्षण, इति कर्कः । श्येनहृत पूतीकानादारभ्य दूर्वाहरितकुशान् पूर्वालाभे पूर्वालाभ उत्तरान् । खादिरादेर्वृक्षकाण्डेनच्छिन्नस्य ये पश्चाद्रूपा अङ्कुरा उत्पद्यन्ते ते श्येनहृतमित्युच्यते । पूतीकाः रोहितृण । बाहार इति तिकाना नामान्तर । एकां गां दत्वा समाप्य पुनर्यजः । अपहृतसोमद्रव्ये यजेत सोमस्थाने एका गौर्दक्षिणेऽन्तर्दर्श. । अत्र च गो. सत्यसत्रय । तत्र हिरण्यादीनामभिर्दाप्ति, इति कर्कः । अवभृथान्ते वा श्रुतिसामर्थ्यात् । अदर्शनादारभ्यैव अवभृथान्त एव वा पुनर्यज्ञो भवतीत्यर्थः । का. श्रौ. सू. २५ । १००–१०४ ।

पुष्पाणि फाल्गुनानि तान्यभिषुणुयादेष वै सोमस्य न्यङ्गो यदरुणपुष्पाणि फाल्गुनानि तस्मादरुणपुष्पाण्यभिषुणुयात् ॥ २ ॥

( ख्य ) यद्यरुणपुष्पाणि न विन्देयुः । श्येनहृतमभिषुणुयाद्यत्र वै गायत्री सोममच्छापतत्तस्या ऽआहरन्त्यै सोमस्यांशुरपतत्तच्छ्येनहृतमभवत्तस्माच्छ्येनहृतमभिषुणुयात् ॥ ३ ॥

( ख्य ) यदि श्येनहृतं न विन्देयुः । ( ग्रा ) आदारानभिषुणुयाद्यत्र वै यज्ञस्य शिरोऽच्छिद्यत तस्य यो रसो व्यप्रुष्यत्तत आदाराः समभवंस्तस्मादादारानभिषुणुयात् ॥ ४ ॥

( ख्य ) यद्यादारान्न विन्देयुः । ( र ) अरुणदूर्वा अभिषुणुयादेष वै सोमस्य न्यङ्गो यदरुणदूर्वास्तस्मादरुणदूर्वा ऽअभिषुणुयात् ॥ ५ ॥

( ख्य ) यद्यरुणदूर्वा न विन्देयुः । ( र ) अपि यानेव कांश्च हरितान्कुशानभिषुणुयात्तत्राप्येकामेव गां दद्यादथावभृथादेवोदेत्य पुनर्दीक्षेत पुनर्यज्ञो ह्येव तत्र प्रायश्चित्तिरिति नु सोमापहृतानाम् ॥ ६ ॥

---

तान्यभिषुणुयात् । एष वै सोमस्य न्यङ्गो यदरुणपुष्पाणि फाल्गुनानि । तस्मादरुणपुष्पाण्य-भिषुणुयात् ॥ २ ॥

यद्यरुणपुष्पाणि न विन्देयुः श्येनहृतमभिषुणुयात्, यत्र वै गायत्री सोममच्छापतत् । तस्या-ऽआहरन्त्यै सोमस्यांशुरपतत्, तच्छ्येनहृतमभवत् । तस्मा च्छ्येहृतमभिषुणुयात् ॥ ३ ॥

यदि श्येनहृतं न विन्देयुः–आदारानभिषुणुयात् । यत्र वै यज्ञस्य शिरोऽच्छिद्यत–तस्य यो रसो व्यप्रुष्यत्–तत आदाराः समभवन् । तस्मादादारानभिषुणुयात् ॥ ४ ॥

यद्यादारान्न विन्देयुः–अरुणदूर्वा अभिषुणुयात् । एष वै सोमस्य न्यङ्गो–यदरुणदूर्वाः । तस्माद-रुणदूर्वा अभिषुणुयात् ॥ ५ ॥

यद्यरुणदूर्वा न विन्देयुः–अपि यानेव कांश्च हरितान्कुशानभिषुणुयात् । तत्राप्येकामेव गां दद्यात् । अथावभृथादेवोदेत्य पुनर्दीक्षेत । पुनर्यज्ञो ह्येव तत्र प्रायश्चित्तिः–इति नु सोमापहृतानाम् ॥ ६ ॥

---

वारुणं गौरं गौरपुष्पाणि च सत्येवं सति यान्यरुणपुष्पाण्यर्जुनतृणानि तान्यभिषुणुयात् । सोमोपहृते यागे ( द्रव्य-मसंस्काराभिषवसस्त्वद्वारेण ) यागसाधनत्वमेव तेषामुच्यते । ' एष वै सोमस्य न्यङ्गः ' ( निकृष्टो यो वल्ला सोमः । अन्या न व्यथते तस्मिन्निति न्यङ्गः ) सोमः अरुणपुष्पेष्वर्जुनेषु श्येनेष्वस्थित इत्यर्थः ॥ २ ॥

यद्यरुणपुष्पाणीति । श्येनहृतं वृक्षेण सोमेन कामवृक्षसंबन्धं ज्ञायते ॥ ३ ॥

यदि श्येनहृतमिति । 'आदाराः' प्रसिद्धानि मध्यदेशतृणानीति अरुणा ( गौरो वा ) दूर्वाङ्कुशादर्भा हरितान् शुष्कानपि यानेव कांश्चिदपि तथान्यप्रकरणानामनवस्थानियमः । (प्रस्तः प्रस्तरम) एकां गां दद्यादिति च संबन्धे

(मु) अथ सोमातिरिक्तानाम् । यद्यग्निष्टोममतिरिच्येत पूतभृत एवोक्थ्यं गृह्णीयाद्यद्युक्थ्यमतिरिच्येत षोडशिनमुपेयुर्यदि षोडशिनमतिरिच्येत रात्रिमुपेयुर्यदि रात्रिमतिरिच्येताहरुपेयुर्नेत्त्वेवातिरेकोऽस्ति ॥ ८ ॥ इति पञ्चमप्रपाठके द्वितीयं ब्राह्मणम् ॥ ४ । ५ । २ ॥ (५-१०) ॥

इति चतुर्थकाण्डे पञ्चमोऽध्यायः ॥ (४ । ५) ॥

---

अथ सोमातिरिक्तानाम् । यद्यग्निष्टोममतिरिच्येत—पूतभृत एवोक्थ्यं गृह्णीयात् । यद्युक्थ्यमतिरिच्येत—षोडशिनमुपेयुः । यदि षोडशिनमतिरिच्येत—रात्रिमुपेयुः । यदि रात्रिमतिरिच्येत—अहरुपेयुः । नेत्त्वेवातिरेकोऽस्ति ॥ ८ ॥

---

स्थालीभ्यो 'यथाप्रभाव' प्रभावेन प्रभाव आप्यायनमित्यर्थः । यथा यथा प्रभावस्तथा तथा इत्येतस्मिन्नर्थे समासः । तावतैव सोमेन यथा सर्वेषु प्रभावेन भवति तथा प्रचरेयुः । आग्रयणस्यैकदेशमिति शेषः । प्रस्कन्द्य "स्कन्दिर् गतिशोषणयोः."—(धा. पा. भ्वा. प. १००४) । प्रपात्येत्यर्थः । 'धयन्तीनाम्' इत्यनुवादमात्रम् । एकामेवेत्यस्यानेकनिवृत्तिपरत्वात् (नीतासु च तासु नैकनिवृत्ते सतत्त्वम्) । अथावभृथादित्येनयथाप्रभाव प्रचरेयुरित्यनेन सम्बध्यते । ततश्च नीतास्वपि दक्षिणासु कलशे दीर्णे पुनर्दीक्षः स्यादेव; एवमितरेष्वपि द्रष्टव्यम् ॥ ७ ॥

अथ सोमातिरिक्तानामिति । सोमोऽतिरिक्तो येषां ते सोमातिरिक्तास्तेषां कर्म प्रवक्ष्यत इति शेषः । यदि तावदग्निष्टोमसंस्थः प्रक्रान्तः सोमोऽतिरिच्यते न सर्वस्तोत्रोपयुक्तः स्यादित्यर्थः । तत्रोक्थ्यं तदुपयोगाय गृह्णीयात् । तत्रापि विगृह्यमाणे दशचमसा हूयन्ते तेन सर्वः सोमोऽन्त उपयोक्ष्यत इत्यभिप्रायः । तत्र चोक्थ्यस्यान्तःपवित्राद्ग्रहणं प्राप्तमत आह—'पूतभृत एवोक्थ्यं गृह्णीयात्' नान्तःपवित्रादिति । अत्र चोक्थ्यग्रहणचोदनयैव विग्रहणं स्तोत्रशस्त्रं चमसोन्नयनहोमादि चोदितमित्यभिप्रायः । यदि तूक्थ्यसंस्थं क्रतुमारभ्य सोमोऽतिरिच्यत एव तत्र षोडशिनं ग्रहमुपगच्छेयुः । तत्रापि हि चमसेष्वतिरिक्तः सोम उपयोक्ष्यते । यदि षोडशिनं क्रतुमारभ्य सोमोऽतिरिच्येत ततोऽतिरात्रमुपगच्छेयुः । रात्रिरिति श्रुत्यन्तर-

---

१–प्रातःसवने चेत्सोमोऽतिरिच्येत तस्य तृतीयोपाकरणमस्ति सोमो अयमिति । उक्थ्यग्रहोन्नयनानन्तरं चमसेष्वपि पूर्णेषु सोमः पूतभृत्यवशिष्येत चेत् तमतिरिक्तं सोमं त्रिभागेन दशसु चमसेषूपोह्य कृष्णाभ्यां हुत्वा चमसमुपाह्य अस्ति सोमो अयमिति मन्त्रेण स्तोत्रोपाकरणं कुर्यादिति सूत्रार्थः । महत्स्वनीषु गायत्रेण स्तुवीरन् । महत्स्वनीषु महत्सूगाम्नीषु गायत्रेण साम्ना स्तुवीरन्नुद्गातार इति सूत्रार्थः । ऐन्द्रावैष्णवं होता शस्त्रमाह । ऐन्द्रावैष्णवं शस्त्रं यस्मात्सोमादतिरिच्येत स एव कार्यः सर्वत्र । यस्मात्स्तोत्रात्पूर्वं तत्र दशकविंशादेः स्तोमात् सोमो अतिरिच्येत स एव स्तोम साम्नः स्तोत्रेऽपि कार्यः । सर्वत्र त्रिष्वपि सवनेषु । इति सूत्रार्थः । माध्यन्दिने चेत्पूर्ववदुपाकरणम् । माध्यन्दिनसवने अतिग्राह्यचमसोन्नयनानन्तरं पूतभृति सोमातिरेके होमादि दशसु चमसेष्वित्यादि प्रातःसवनवत् कुर्यादिति सूत्रार्थः । बण्महाँ असीति बृहतीष्वादित्यवतीषु गौरीवितेन स्तुवीरन् । गौरीवितं साम । पूर्ववद्धोता । ऐन्द्रावैष्णवं शस्त्रं शंसतीत्यर्थः । तृतीयसवने चेद्विष्णोः शिपिविष्टवतीषु गौरीवितेन । तृतीयसवने अतिग्राह्यचमसोन्नयनानन्तरं पूतभृति सोमातिरेके तमतिरिक्तं सोमं दशसु चमसेषु विभज्य अस्ति सोमो अयमिति स्तोत्रोपाकरणं तत उद्गातारः शिपिविष्टविष्णुलिङ्गासु ऋक्षु गौरीवितेन स्तुवीरन्निति सूत्रार्थः । एतत्कृत्वोक्थ्यं वा गृह्णीयात् । एतत् प्रायश्चित्तं कृत्वा पूतभृति सोमातिरेके पूतभृत एव उक्थ्यपात्रे उक्थ्यं गृहीत्वा आसाद्य ततो विगृह्णीयाद्वा । इति सूत्रार्थः । उक्थ्याच्चेत्षोडशी कार्यः । उक्थ्यसंस्था चेत् तृतीयसवने सोमोऽतिरिच्येत तदा सोमस्योपयोगाय षोडशी कार्यः उक्थ्यसंस्थः प्रारब्धोऽपि निमित्त-

# अथ षष्ठाध्याये प्रथमं ब्राह्मणम् ।

प्रजापतिर्वा॒ऽएष यदँ॒शुः । सो॑ऽस्यैष आ॒त्मैवात्मा ह्य॒यं प्रजापतिस्त॒दस्यैतमात्मानं कुर्वन्ति य॒त्रैतं गृह्णन्ति त॒स्मिन्नेतान्प्राणान्दधाति य॒थाय॒थैते प्राणा ग्र॒हा व्याख्याय॒न्ते स ह स॒र्वतनूरेव य॒जमानोऽमु॒ष्मिँल्लोके स॒म्भवति ॥ १ ॥

अंशुग्रहः ।

प्रजापतिर्वाऽएष यदंशुः सोऽस्यैष आत्मैव । आत्मा ह्ययं प्रजापतिः । तदस्यैतमात्मानं कुर्वन्ति—यत्रैतं गृह्णन्ति । तस्मिन्नेतान्प्राणान्दधाति । यथा—यथैते प्राणा ग्रहा व्याख्यायन्ते । स ह सर्वतनूरेव यजमानोऽमुष्मिंल्लोके सम्भवति ॥ १ ॥

प्रसिद्धानि द्वादशप्रदानानि रात्र्यां पूर्वं तानि गृह्यन्ते तेषां चैकं दशभिर्दशभिश्चमसैस्तथैव च [ महोवानिरोहीय ] चमसप्रदानसन्धिस्तोत्रमाश्विन शस्त्रमेनामीदृशीं रात्रिमुपेयुः । यदि तु रात्रिप्रक्रान्त्या सोमोऽतिरिच्येत ततोऽहरूपेषु स्तब्धपूर्वस्मादेवोवघ्यायनुक्रमणादप्तोर्यामात्मकमहरिति गम्यते ततश्च तिरोह्नीयेभ्य ऊर्ध्वं रात्रिपर्याय उत्तम. कार्य. । ( स तु मृष्ट च समास ) प्रायणीये नेत्येव अतीरेकोऽस्तीति सामान्यवचनमेतदुक्तं भवति न क्वचिदपि सोमस्यातिरेक. स्वीकार्यः सर्वस्यातिरिक्तप्रदानविधेर्वृद्धया वा श्रुत्यन्तरोक्तेन चोपायेन प्रदेयत्वमिति । ते च श्रुत्यन्तरोक्ता. प्रदानोपायाः प्रात.सवनत्वात्सोमोऽतिरिच्येतेत्युपक्रम्य दर्शिताः सर्वेषु सोमापहारादिषु परमेष्ठ्यादिहोमोऽप्यस्ति कलशभेदने स्कन्नप्रायश्चित्तमित्यपरो विशेषः ॥ ८ ॥

इति श्रीहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये चतुर्थकाण्डे पञ्चमेऽध्याये दशमं ब्राह्मणम् ॥ (४-५-१०) इति पञ्चमोऽध्यायः समाप्तः ॥ (४-५) ॥

प्रजापतिर्वा इति । अंशुब्राह्मणमेतत् । प्रजापतिरभिमानी अंशावोऽधिदेवम् । अयं ह्यंशो भिषाय प्राणिस्येताम्योऽतिरिक्तस्तूष्णीमुपचर्यते, द्वादशदक्षिणश्चेत्युपपद्यते ' प्रजापतिः ' ' अंशुः ' इति च सोमसम्बन्धाद् ग्रहस्य

—पश्चात् षोडशीसस्य' कार्य. । इति सूत्रार्थ. । षोडशिनश्चेदतिरात्र. । षोडशीसंस्थाकक्रतौ तृतीयसवने सोमातिरेके षोडशीसंस्थः प्रारब्धोऽपि अतिरात्रसंस्थः कार्यं इति सूत्रार्थः । अतिरात्राच्चेद्बृहत् । अतिरात्रसंस्था चेत् आश्विनार्थं चमसेषूर्ध्वतेषु पूतभृति सोमातिरेके तदुपयोगाय शिपिविष्टविष्णुलिङ्गास्वृक्षु बृहत्साम कुर्वीरन्नुद्गातार इति सूत्रार्थ. । महाव्रतमेके यथोक्तम् । अतिरात्रातिरिक्ते सोमे महाव्रत साम । यथोक्त प्रदेशान्तरे । यथा गवामयने उक्त तथाऽत्र कुर्वन्त्येके । इति सूत्रार्थ । आप्तोर्यामो वेति पक्षान्तरम् । अतिरात्रे सोमातिरेके अतिरात्रसंस्थ प्रारब्धोऽपि अप्तोर्यामसंस्थाक· कार्य. । अत्याश्विनस्यैवातिरिक्तोऽस्तीति श्रुते. । अप्तोर्यामे सोमातिरेके तस्याप्तोर्यामस्यैवावृत्तिः कार्या । नह्यप्तोर्यामात्परं संस्थान्तरमस्ति अतिरिक्तसोमोपयोगाय । इति सूत्रार्थ· । पूर्वं सवनादतिरिक्तस्योत्तरे धावनमेके । इतरेषु सवनेषु सोमातिरेके पक्षान्तरमिदम् । स निकामयमानोऽभ्यतिरिच्यत इति श्रुते. । एके आचार्या. पूर्वसवनातिरिक्तसोम उत्तरे सोमे सधावयति प्रक्षिपन्ति कुत एतद् श्रुते. । इति सूत्रद्वयार्थः । तृतीयसवनाच्चेद्धारियोजनेऽवनीयहोम' अस्मिन् पक्षान्तर एव तृतीयसवने । अस्ताप्तजोपित्रस्याप्यवहरणम् । सोमातिरेके उत्तरस्य सवनस्याभावात् कथ क्रियतामितीतिकर्तव्यताकांक्षाया द्रोणकलशस्थं सोमं हारियोजनमध्ये अवनीय प्रक्षिप्य जुहुयात् । हारियोजनमध्ये प्रक्षेपस्यास्मृतौ अतिरिक्तं सोमं ऋजीषमध्ये प्रक्षिप्य अवभृथमज्जनसमये अप्सु अवहरणं प्रक्षेपणं विदध्यात् इति सूत्रार्थ । इति सोमानि सोमातिरेकप्रायश्चित्तानि । का० श्रौ० सू० २५ । ११०—१२८ ।

१-१२ सहिताया कण्वामघृतोऽश्विनादयोऽन्याभ्यग्रहग्रहणमन्त्राः, नेशीनां रक्तेत्यादयो अवधानमन्त्रा , गर्भिषूत्व देवेत्यादय सोमे अंशुग्रहमन्त्रास्व्याख्यायन्ते । त इह ब्राह्मणे न सन्ति ।

तुदारुम्भणवत् । ( ज्ञ ) यत्रैतं गृह्णन्त्यथैतुदनारम्भणमिव यत्रैतं न गृह्णन्ति तुस्माद्वाऽअंशुं गृह्णाति ॥ २ ॥

तं वाऽऔदुम्बरेण पात्रेण गृह्णाति । प्रजापतिर्व्वा ऽएष प्राजापत्य ऽउदुम्बरस्तुस्मादौदुम्बरेण पात्रेण गृह्णाति ॥ ३ ॥

---

तद् आरम्भणवद्—यत्रैतं गृह्णन्ति । अथैतदनारम्भणमिव—यत्रैतं न गृह्णन्ति । तस्माद्वाऽअंशुं गृह्णाति ॥ २ ॥

तं वाऽऔदुम्बरेण पात्रेण गृह्णाति । प्रजापतिर्वाऽएषः । प्राजापत्य उदुम्बरः । तस्मादौदुम्बरेण पात्रेण गृह्णाति ॥ ३ ॥

---

नामधेयम् साधकोंऽशुरिति सोऽस्यैष आत्मैवेत्यध्यात्मआत्मा ह्ययं प्रजापतिरिति मत्प्रजापतिः लिङ्ग तत्सर्वेषामेव प्राणिनामन्यो लिङ्गात्मकः यदपि प्रजापतेः शरीरं वैराजं तदपि साधारणं शरीरिणाम् आत्मा सर्वप्राणिनामित्यभिप्रायः । ननु घात्मा ह वाऽस्याग्रयण आत्मा शरीरमित्युक्त नैष न दोषः । स हि स्थूलोऽयं च निरुक्तो लिङ्गानां भविष्यति एवमपि ध्रुवो निरुक्त आत्मेत्युक्तमेवमपि तद्विशिष्ट लिङ्गमिदं सामान्यमिति दोषः । तचस्मिन्नुतावस्थेयं यजमानस्यैवमात्मान महान्त कुर्वन्ति ऋत्विजो यत्र चैतं गृह्णन्त्यंशुमस्मिन्थ अंशात्मके आत्मनि ' एतान् ' महात्मकान् ' प्राणान् ' दधात्यध्वर्युः । कथं ? ' यथायथा एते ' उपांश्वादयो ग्रहाः प्राणोदानव्यानादिरूपेण व्याख्यायन्ते । अथ तथा कृते आत्मनि क्रियमाणस्य यजमानस्यान्येभ्यो यजमानेभ्यः प्रविष्ट भवतीत्यत आह—स हेति । यस्य य उपांशुक्रतौ गृह्यतेंऽशुः ' सर्वतनूः ' सर्वं जगत्तनूरस्येति सर्वतनूः सर्वात्मक इत्यर्थः ॥ १ ॥

स यजमानोऽमुष्मिंल्लोके सम्भवति तदारम्भः अस्याथ वाऽपरो विशेषः ' यत्र ' कर्मणि ' एतम् ' अंशुं गृह्णन्ति इत्येतत् ' आरम्भणवत् ' आरभ्मते कार्यमनेनेत्यारम्भणम् उपादान तदेवंभूतं संपृक्त लिङ्गं संयुक्तं यत्र विद्यते तदारम्भणवत् । एतदुक्त भवति योऽंशुमता क्रतुना यजेत तस्मै तदुपादानमारभ्मतेऽयमेव भवेति । यस्तु प्राकृतेन क्रतुना यजते स परक्रीतोपादानेन परिमितकार्यमाप्नोति तत्तदाहैवैतत्कर्मणा प्रज्ञातादौ । ' यत्रैतं न गृह्णन्ति ' इति ॥ २ ॥

तं वा औदुम्बरेणेति । प्रजापतिरयमित्येतस्मिन्नर्थे ' प्राजापत्यः ' तद्धितो ण्यप्रत्ययः । ' उदुम्बरः ' ' तस्मात् ' सर्वस्मादात्मनः फलनिष्पत्तेः ॥ ३ ॥

---

१–अपो निधायाग्रयदाभ्यग्रहणमौदुम्बरेण चतुःस्रक्तिना । अग्रे शोत्सूष्णीं सर्वत्र । अनुचरत्वसंबेच्छन् । अदाभ्यानाग्रे शुनिवपनोपमार्जनसक्तमहरणमहमहोमान् हिरण्यं घोपजिघ्रति । का. श्रौ. सू. १२ । ९९–१०२ ।

तं वै चतुःस्रक्तिना पात्रेण गृह्णाति । त्रयो वाऽइमे लोकास्तदिमानेव लोकांस्त्रिभिराप्नोति प्रजापतिर्वाऽअतीमाँल्लोकांश्चतुर्थस्तत्प्रजापतिमेव चतुर्थ्याऽऽप्नोति तस्माच्चतुःस्रक्तिना पात्रेण गृह्णाति ॥ ४ ॥

स वै तूष्णीमेव ग्रावाणमादत्ते । तूष्णीमꣳशून्निवपति तूष्णीमप ऽउपसृजति तूष्णीमुद्यत्य सकृदभिषुणोति तूष्णीमेनमनवानञ्जुहोति तदेनं प्रजापतिं करोति ॥ ५ ॥

( त्य ) अथास्याꣳ हिरण्यं बद्धं भवति । तदुपजिघ्रति स यदेवात्र क्षणुते वा वि वा लिशतेऽमृतमायुर्हिरण्यं तदमृतमायुरात्मन्धत्ते ॥ ६ ॥

तदु होवाच राम औपतस्विनिः । काममेव प्राण्यात्काममुदन्याद्यद्वै तूष्णीं जुहोति तद्वेवैनं प्रजापतिं करोतीति ॥ ७ ॥

( त्य ) अथास्याꣳ हिरण्यं बद्धं भवति । तदुपजिघ्रति स यदेवात्र क्षणुते वा वि वा लिशतेऽमृतमायुर्हिरण्यं तदमृतमायुरात्मन्धत्ते ॥ ८ ॥

---

तं वै चतुःस्रक्तिना पात्रेण गृह्णाति । त्रयो वाऽइमे लोकाः । तदिमानेव लोकांस्त्रिभिराप्नोति । प्रजापतिर्वाऽअतीमांल्लोकांश्चतुर्थः । तत् प्रजापतिमेव चतुर्थ्याऽऽप्नोति । तस्माच्चतुःस्रक्तिना पात्रेण गृह्णाति ॥ ४ ॥

स वै तूष्णीमेव ग्रावाणमादत्ते । तूष्णीमंशून्निवपति । तूष्णीमप उपसृजति । तूष्णीमुद्यत्य, सकृदभिषुणोति । तूष्णीमेनमनवानञ्जुहोति । तदेनं प्रजापतिं करोति ॥ ५ ॥

अथास्या हिरण्यं बद्धं भवति । तदुपजिघ्रति । स यदेवात्र क्षणुते वा, वि वा लिशते-अमृतमायुर्हिरण्यं, तदमृतमायुरात्मन् धत्ते ॥ ६ ॥

तदु होवाच राम औपतस्विनिः-काममेव प्राण्यात्, काममुदन्यात् । यद्वै तूष्णीं जुहोति, तद्वेवैनं प्रजापतिं करोतीति ॥ ७ ॥

अथास्यां हिरण्यं बद्धं भवति । तदुपजिघ्रति । स यदेवात्र क्षणुते वा, वि वा लिशते । अमृतमायुर्हिरण्यम् । तदमृतमायुरात्मन्धत्ते ॥ ८ ॥

---

तं वै चतुःस्रक्तिनेति । प्रसन्नप्रायमतः परम् । 'स यदेवात्र क्षणुते वा' ( मनोरवात्मद्विलिङ्गादिदोषयति । तद्विरः ) पूर्वब्राह्मणे तत्समर्थयति ॥ ४ ॥ ५ ॥ ६ ॥

उपतस्विनस्यापत्यम् 'औपतस्विनिः' ॥ ७ ॥

अथास्यां हिरण्यमिति । पुनरवघ्राणवचनमुच्छ्वासवचनपक्षस्याभिव्यक्त्यर्थम् । ( पूर्वत्राप्यनुच्छ्वासवचनपक्षेऽप्यनिहत्यर्थं पूर्वत्राप्यनुच्छ्वासपक्षे दोष समानार्थकार्यमिव हिरण्यस्यावघ्राणमित्यर्थः )॥ ८ ॥

तदु होवाच बुडिल आश्वतराश्विः । ( रु ) उद्यत्यैव गृह्णीयान्नाभिषुणुयादभिषुण्वन्ति वाऽअन्याभ्यो देवताभ्यस्तदन्यथा ततः करोति यथो चाऽन्याभ्यो देवताभ्योऽथ यदुद्गच्छति तदेवास्याभिषुतं भवतीति ॥ ९॥

तदु होवाच याज्ञवल्क्यः । (ल्क्योऽभ्ये) अभ्येवषुणुयान्न सोम इन्द्रमसुतो ममाद नाब्रह्माणो मघवानꣳ सुतास इत्यृषिणाभ्युऽनूक्तं न वाऽअन्यस्यै कस्यै चन देवतायै सकृदभिषुणोति तदन्यथा ततः करोति यथो चान्याभ्यो देवताभ्यस्तस्माऽभ्येवषुणुयादिति ॥ १० ॥

तस्य द्वादश प्रथमगर्भाः । पष्ठौह्यो दक्षिणा द्वादश वै मासाः संवत्सरस्य संवत्सरः प्रजापतिः प्रजापतिरꣳशुस्तदेनं प्रजापतिं करोति॥११॥
( शतम् ॥ २८०० ॥ )

---

तदु होवाच बुडिल आश्वतराश्विः-उद्यत्यैव गृह्णीयाद्, नाभिषुणुयात् । अभिषुण्वन्ति वाऽअन्याभ्यो देवताभ्यः । तदन्यथा ततः करोति । यथो चान्याभ्यो देवताभ्यः । अथ यदुद्गच्छति-तदेवास्याभिषुतं भवतीति ॥ ९ ॥

तदु होवाच याज्ञवल्क्यः-अभ्येव षुणुयात् । " न सोम इन्द्रमसुतो ममाद, नाब्रह्माणो मघवानं सुतासः " इति ऋषिणाऽभ्यनूक्तम् । न वा अन्यस्यै कस्यै चन देवतायै सकृदभिषुणोति । तद् अन्यथा ततः करोति । यथो चान्याभ्यो देवताभ्यः । तस्मादभ्येव षुणुयादिति ॥ १० ॥

तस्य द्वादश प्रथमगर्भाः पष्ठौह्यो दक्षिणा । द्वादश वै मासाः सम्वत्सरस्य । सम्वत्सरः प्रजापतिः। प्रजापतिरंशुः । तदेनं प्रजापतिं करोति ॥ ११ ॥

---

'बुडिलो' नाम ब्रह्मवादी अश्वतरोऽश्वोऽस्यास्तीत्यश्वतराश्वः । अश्वतराश्वस्यापत्यम् 'आश्वतराश्विः' स उवाच-'उद्यत्य' ऐशम्यैव ग्रावाणमधिषवणस्यानामंशूनामुपरि 'तनोऽशव' उत्सृज्य ग्रावोऽशु गृहीत्वा गृह्णीयात् । ग्रावभिरंशूनतिहन्यात् । किं कारणम् । 'अभिषुण्वन्ति' सोममन्याभ्यो ग्रहदेवताभ्यः प्रजापतेरेकादशीभूताभ्यः, न यथा प्रजापतेः सामान्यात्मकस्य, ततश्च यदुद्यम्यानभिषुत्य गृह्णाति तद्यथा 'अन्याभ्यो देवताभ्यो वै' तथा करोति ततः । अथ 'यदुद्गच्छतीति' ( तत्प्रातरभिषवाभिषुन्याग्नौ ) जुहोति तं हुत्वा यज्ञमग्नावेव योनौ रेतोभूतं सिञ्चतीति ( वाचा दभिषवेण ) सर्वत्र भाव्यमित्यभिप्रायः ॥ ९ ॥

तदु होवाचेति । याज्ञवल्क्यस्तु 'अभिषुणुयादेव' ( मद्धबीवत्वै गृह्णीयादिति ) किं कारणम् । मन्त्रेणानभिषुतस्य सोमस्य देवतर्पणत्वप्रतिषेधात् "न सोम इन्द्रमि" ति मन्त्रः । अस्यार्थः-उत्तरस्मिन्नर्द्धे तच्छब्दः श्रूयते । पूर्वस्मिन् यच्छब्दोऽध्याहार्यः । यमिन्द्र मघवानमभिषुतः सोमो न मादयति न चाभिषुत. अपि सोमः अब्रह्माणः [प्रत्यक् कल्पयन्ति तस्मै इन्द्राय त्वा स्तुतिं जनयेऽहम् कीदृशामुक्थ्य यज्ञे योषित् यद्युक्थ्यं क्रियमाणं

---

१-बयस्य वा ग्रहणम् । का. श्रौ. सू. १२ । १०३ ।

तासां द्वादश गर्भाः । ( स्ता ) ताश्चतुर्विंᳪंशतिश्चतुर्विंᳪं शतिर्वै संवत्सरस्यार्धमासाः संवत्सरः प्रजापतिः प्रजापतिरᳪंशुस्तदेनं प्रजापतिं करोति ॥ १२ ॥

तदु ह कौकूस्तः । ( श्च ) चतुर्विंᳪंशतिमेवैताः प्रथमगर्भाः पष्ठौहीर्दक्षिणा ददावृषभं पञ्चविंᳪंशᳪं हिरण्यमेतदु ह स ददौ ॥ १३ ॥

स वाऽएष न सर्वस्यैव ग्रहीतव्यः । ( ऽ ) आत्मा ह्यस्यैष यो न्वेव ज्ञातस्तस्य ग्रहीतव्यो यो वाऽस्य प्रियः स्याद्यो वाऽनूचानोऽनूक्तेनैनं प्राप्नुयात् ॥

( त्स ) सहस्रे ग्रहीतव्यः । सर्वं वै सहस्रᳪं सर्वमेष सर्ववेदसे ग्रहीतव्यः सर्वं वै सर्ववेदसᳪं सर्वमेष विश्वजिति सर्वपृष्ठे ग्रहीतव्यः सर्वं वै विश्वजित्सर्वपृष्ठः सर्वमेष वाजपेये राजसूये ग्रहीतव्यः सर्वᳪं हि तत्सत्रे ग्रहीतव्यः सर्वं वै सत्रᳪं सर्वमेष एतानि ग्रहणानि ॥ १५ ॥

इति पञ्चमप्रपाठके तृतीयं ब्राह्मणम् ॥ ४-५-३ ॥ ( ६-१ ) ॥

---

तासां द्वादश गर्भाः । ताश्चतुर्विंशतिः । चतुर्विंशतिर्वै संवत्सरस्यार्धमासाः । सम्वत्सरः प्रजापतिः । प्रजापतिरंशुः । तदेनं प्रजापतिं करोति ॥ १२ ॥

तदु ह कौकूस्तः—चतुर्विंशतिमेवैताः प्रथमगर्भाः पष्ठौहीर्दक्षिणा ददौ, ऋषभं पञ्चविंशम् । हिरण्यम्, एतदु ह स ददौ ॥ १३ ॥

स वाऽएष न सर्वस्यैव ग्रहीतव्यः । आत्मा ह्यस्यैषः । यो न्वेव ज्ञातः—तस्य ग्रहीतव्यः । यो वाऽस्य प्रियः स्याद्, यो वाऽनूचानः । अनूक्तेनैनं प्राप्नुयात् ॥ १४ ॥

सहस्रे ग्रहीतव्यः । सर्वं वै सहस्रम् । सर्वमेषः । सर्ववेदसे ग्रहीतव्यः । सर्वं वै सर्ववेदसम् । सर्वमेषः । विश्वजिति सर्वपृष्ठे ग्रहीतव्यः । सर्वं वै विश्वजित्सर्वपृष्ठः । सर्वमेषः । वाजपेये राजसूये ग्रहीतव्यः । सर्वं हि तत् सत्रे ग्रहीतव्यः । सर्वं वै सत्रम् । सर्वमेषः । एतानि ग्रहणानि ॥ १५ ॥

---

स इन्द्रो जुषति सेवने किमर्थं तादृश जनयति यथा स तज्जन्यमान नवीयो नवतर शत्रुं ' शृणवत् ' शृणुयात् तन्मनुष्य इवास्माक स्वभूतमुक्त तस्माद्विक्ष्य जनयेव जुषेय तृतीय शृणवद्यथा न इति शेष. । तत. स्वय नाभिषुतो तमेव प्रजापतिरित्यभिप्रायः । ] यथा चान्याभ्यो देवताभ्य इति कुर्वत अप्राजापत्योऽशुरिति दर्शयति—न सर्वमहस्य ग्रहीतव्योंऽशुरित्युपपत्त्या समात्रा ज्ञानादिप्रयोगेष्वेवाविधानात् । यो वाऽनूचानोऽभिजित. शुद्धस्य प्रयोगे ग्रहीतव्य इत्यत आह—सहस्रे इति । सहस्रेण सहस्रदक्षिणः क्रतुर्लभ्यते सहस्रदक्षिणे क्रतौ ग्रहीतव्य

---

१-सत्र १ सहस्र २ सर्ववेदस ३ वाजपेय ४ राजसूय ५ विश्वजि ६ सर्वपृष्ठेषु ७ ग्रहणमवकाश्यश्चेत् । अवकाश्य इति यजमान विशेषणम् । अवकाश्य. ज्ञात· प्रियोऽनूचानश्च । का. श्रौ. सू १२ । १०४ । २-द्वादश मत्सतर्यौ गर्भिण्यो दक्षिणाऽसत्रे । का. श्रौ. सू. १२ । १०५ ।

एतं वाऽएते गच्छन्ति । षड्भिर्मासैर्य एष तपति ये संवत्सरमासते तदुच्यतऽएव सामतो यथैतस्य रूपं क्रियतऽउच्यतऽऋक्तोऽथैतदेव यजुष्टः पुरश्चरणतो यदेतं गृह्णन्त्येतेनोऽएवैनं गच्छन्ति ॥ १ ॥

(न्त्य) अथातो गृह्णात्येव । (वो) उदु त्यं जातवेदसं देवं वहन्ति केतवः ॥ दृशे विश्वाय सूर्यम् ॥ उपयामगृहीतोऽसि सूर्याय त्वा भ्राजायैष ते योनिः सूर्याय त्वा भ्राजायेति ॥ २ ॥

इति पञ्चमप्रपाठके चतुर्थं ब्राह्मणम् ॥ ४-५-४ ॥ (६.२.) ॥

अथातः पृष्ठ्यस्यैव । पृष्ठैकादशिन्यैवेयात्स ऽआग्नेयं प्रथमं पशुमालभतेऽथ वारुणमथ पुनराग्नेयमेवमेवैतया पृष्ठैकादशिन्येयात् ॥ १ ॥

---

विषुवदहः ।

एतं वाऽएते गच्छन्ति षड्भिर्मासैः य एष तपति, ये सम्वत्सरमासते । तदुच्यतऽएव सामतो-यथैतस्य रूपं क्रियते उच्यतऽऋक्तः, अथैतदेव यजुष्टः पुरश्चरणतो-यदेतं गृह्णन्ति । एतेनो ऽएवैनं गच्छन्ति ॥ १ ॥

अथातो गृह्णात्येव-" उदुत्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् ॥ उपयामगृहीतोऽसि सूर्याय त्वा भ्राजाय, एष ते योनिः सूर्याय त्वा भ्राजाय "-(वा. सं. ८।४१) इति ॥ २ ॥

अथातः पृष्ठ्यस्यैव । पृष्ठैकादशिन्यैवेयात् । स आग्नेयं प्रथमं पशुमालभते, अथ वारुणम् अथ पुनराग्नेयम्-एवमेवैतया पृष्ठैकादशिन्येयात् ॥ १ ॥

---

एव । सर्वस्वदक्षिणे च क्रतौ विश्वजिदादिरतावेव च । एतानि ग्रहणानीत्युपसंहारः । तत्र तेषु क्रतुष्वनादीनां ग्राह्येत्यन्वेषामिति ॥ १०-१६ ॥

इति श्रीहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये चतुर्थकाण्डे षष्ठेऽध्याये प्रथमं ब्राह्मणम् ॥ (४-६-१) ॥

एतं वा इति । सौमिकानां क्रतूनामखिलमेतद्भवतीत्येवं गवामयनिके विषुवत्येव महो निकुर्यात् । विषुवत्येव-मात्रं विधीयते प्रसज्याभ्यामेव कण्डिकाभ्याम् ॥ १ ॥ २ ॥

इति श्रीहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये चतुर्थकाण्डे षष्ठेऽध्याये द्वितीयं ब्राह्मणम् ॥ (४-६-२) ॥

अथातो गवामयन एव सवनीयविकल्पाश्रयो दृश्यन्ते । अथात इति । 'अथातः' 'पृष्ठ्यस्य' विधानमिति शेषः । पृष्ठ्यामयनं पृष्ठ्यन प्रतिकर्म समेत्यनेनेत्ययन मार्गः कल्पः । तत्र तावत्प्रथमं कल्पमाह-

